गङ्गावीचिप्लुतपरिसरः सौधमालावतंसो
[1]यास्यत्युच्चैस्त्वयि रसमयो विस्मयं सुह्मदेशः ।
श्रोत्रक्रीडाभरण[2]पदवीं भूमिदेवाङ्गनानां
तालीपत्रं नवशशिकलाकोमलं यत्र याति ॥ २७ ॥

तस्मिन् सेनान्वयनृपतिना देवराज्याभिषिक्तो
देवः सुह्मो[3] वसति कमलाकेलिकारो मुरारिः ।
पाणौ लीलाकमलमसकृद् यत्समीपे वहन्त्यो
लक्ष्मीशङ्कां प्रकृतिसुभगाः कुर्व्वते वाररामाः ॥ २८ ॥

यातस्योर्द्ध्वं[4] धनपतिनगेनेव गौरैः[5]रगारैः
पश्येस्तस्मिन् नगरमनघं चारु चन्द्रार्द्धमौलेः ।
यत्रानेकप्रियनखपद[6]व्याजतो[7] वाररामाः
भर्त्तुर्भूषाशशधरकलाचिह्नमङ्के वहन्ति ॥ २९ ॥

---

२७। श्रोत्रक्रीडाभरणपदवी' क्रोडाकर्णभूषणत्वम् । 'भूमिदेवाङ्गनानां राजमहीषीणाम्' (A)। एतेन सुह्मेषु वसन्तागमो द्योत्यते ।

२८। 'देवराज्यं देवालयः' (A) लीलाकमलहस्ता वाराङ्गनाः कमला इव प्रतीयन्ते इति भावः ।

२९। धनपतिनगेन कैलासपर्व्वतेन । चन्द्रार्द्धमौलेर्हरस्य । गौरैरगारैरुपलक्षितं नगरं पश्येरित्यन्वयः । 'ग्रीवाकुचे वक्रनखप्रहारो दत्तोऽर्द्धचन्द्राख्य उदीरितोऽसौ' इत्यनङ्गरङ्गः । नखप्रहारस्य चन्द्राकारत्वात् हरशिरोभूषया चन्द्रकलया साम्यम् इति भावः ।

---

1. या—M. षा—A. But यास्यति seems to be happier.

2. —भवन—M. भरण—A.

3. साधाह—M. सुषाह—R. सुह्माह—A. But in the last it is corrected into सुह्मे व in the margin.

4. —स्योर्द्ध—R and A. —स्योद्ध—M.

5. गौर्घ—R. सौर्ध—M. गौरै—A.

6. —प्रियसखनखपद—R. —प्रियनखपद—A. The portion is marked as doubtful in M.

7. After व्याजतो, सुभगाः कुर्व्वते is again wrongly found in A.

तत्रानर्घ्यं रघुकुलगुरुं स्वर्णदीतीरदेशे
नत्वा देवं व्रज गिरिसुतासंविभक्ताङ्गरम्यम् ।
याते यस्मिन् नयनपदवीं सुन्दराभ्रलतानां
प्रौढ़स्त्रीणां गलति रमण[1]प्रेमजन्माभिमानः ॥ ३० ॥

तत् चेतश्च त्रिदिवसरितस्तान्तरा सेवनीयः
श्रीवल्लाल[2](?)क्षितिपतियशोबान्धवः सेतुबन्धः ।
आरूढ़ानां त्रिदिवतटिनीस्नानहेतोर्जनानां
यत्र द्वेधाप्यमरनगरी सन्निकृष्टा विभाति ॥ ३१ ॥

गङ्गां फेनस्तवकमुकुरं वीचिहस्ते वहन्तीं
सेवेथास्तामथ परिसरप्रौढ़हंसावतंसाम् ।
प्रत्यावृत्य व्रजति जलधौ प्रेयसि प्रेमलीला
कर्त्तुं केशग्रहमिव किमप्युद्गता[3] या विभाति ॥ ३२ ॥

तोयक्रीड़ारसरसनिपतत्-(?)[4]सुह्मसीमन्तिनीनां
वीचौ[5]धौतैः स्तनमृगमदः श्यामलीभूय भूयः ।

---

३० । स्वर्णदी भागीरथीति यावत् । गिरिसुतासंविभक्ताङ्गरम्यं देवम् अर्द्धनारीश्वरम् इति यावत् । प्रौढस्त्रीणां प्रकृष्टप्रेमवतीनाम् इति ध्वनिः । रमणप्रेम रमणे रमणस्य च प्रेम । गलति दूरीभवति अर्द्धनारीश्वरमूर्त्तिसंसूचितप्रेम्णोऽहरगौर्य्याः स्वापेक्षया प्रकृष्टप्रेमवत्त्वविज्ञाना-दिति भावः ।

३१ । द्वेधा स्नानजन्यपुण्येन अमरावतीसदृशविजयपुरराजधानीसन्निधानाच्च ।

३२ । अवतंसः कर्णभूषणम् । एतेन गङ्गायाः पत्युर्जलधेरुपरि आधिपत्यातिरेको व्यज्यते ।

---

1. रमण—A and M. मरण—R.

2. —बल्लान—M. —बल्लाल—A. 3. —द्गता—A —द्गत, ...

4. —तत् दल—R. —ततदल—M. —तद्ल—A. But सुह्म and no... ह्म seems to be the correct reading here.

5. —चि—M. which gives rise to a faulty metre. —चौ—A.

भागीरथ्यास्तपनतनया यत्र निर्याति देवी
देशं यायास्तमथ जगतीपावनं भक्तिनम्रः ॥ १३ ॥

संसर्पन्तीं प्रकृतिकुटिलां दर्शितावर्त्तचक्रां
तामालोक्य त्रिदशसरितो निर्गतामम्बु[1]गर्भात् ।
मा[2] निर्मुक्तासितफणिवधूशङ्कया कातरो[3] भू-
र्भीतः सर्व्वो भवति भुजगात् किं पुनस्त्वादृशो[4] यः ॥ १४ ॥

क्रीड़न्तीनां पयसि रभसात्तत्र लीलावतीनां
वीचीहस्तै रचय कुचयोरंशुकस्रंसनानि ।
सद्यस्तासामपि च रमणालोकनव्याकुलानां
यान्तु क्रीड़ामसृणहसितान्युत्तरीयाञ्चलत्वम् ॥ १५ ॥

[5]स्कन्धावारं विजयपुरम् इत्युन्नतां राजधानीं
दृष्ट्वा तावद् भुवनजयिनस्तस्य राज्ञोऽधिगच्छेः ।

---

१३। स्तनमृगमदैः स्तनस्थैर्मृगमदैः। तपनतनया यमुना। जगतीपावनं तं देशं त्रिवेणीत्याख्यम् इति शेषः।

१४। तां यमुनां त्रिदशसरितो गङ्गायाः। असितः कृष्णवर्णः। 'निर्मुक्तो मुक्तकञ्चुकः'। शङ्कयेति यमुनायाः कृष्णत्वादिति भावः। सर्व्वः सकलः अयम् शिवः। त्वादृशो भवादृशो यो वायुभुजां सर्पाणामाहारभूत इति यावत्।

१५। मुक्ततया हसितस्य उत्तरीयाञ्चलत्वकल्पनम्।

---

1. —दम्ब —R. —तामम्बु—M and A.

2. मा—Missing in R, is found in A and is supplied in M.

3. —रा—R रो—M and A.

4. —स्त्वदृशो—M. —स्त्वादृशो—A.

5. स—R and A. In explaining यत्, यत्र, यस्य etc. in the succeeding stanzas the word सन्धावार is invariably used in the marginal notes in A. स्क—M.

गङ्गावातस्त्वमिव चतुरो यत्र पौराङ्गनानां
सम्भोगान्ते सपदि वितनोत्यङ्गसंवाहनानि ॥ २६ ॥

यत्सौधानामुपरि वडभीशालभञ्जीषु लीना:[1]
सुस्निग्धासु[2] प्रकृतिमधुरा: केलिकौतूहलेन ।
उन्नीयन्ते कथमपि रह:पाणिपङ्केरुहाग्र-
स्पर्शोद्गच्छत्पुलकमुकुला: सुभ्रुवो वल्लभेन ॥ २७ ॥

स्निग्धश्यामारमणमणिभि[3]र्बद्धमुग्धालवाला:
पौरस्त्रीभि: क्रमुकतरवो रोपिता: प्राङ्गणेषु ।
यत्रायत्नोपगतसलिलैर्नक्तमासिक्तमूला
नापेक्षन्ते[4] परिजनवधूपाणिविश्राणिताम्भ:[5] ॥ २८ ॥

गङ्गाश्लेषप्रकृतिविमले पालिते तेन राज्ञा
जाता लोकद्वितयविगलद्भीतयो यत्र पौरा: ।

२६। स्कन्धावार: शिविरम्। 'स्कन्धावारोऽस्य तु स्थिति: शिविरम्' इति हेम:। एतेन गङ्गातीरवर्त्तित्वं विजयपुरस्य सूच्यते।

२७। वडभी गृहचूडा। शालभञ्जी काष्ठादिपुत्तलि:। वल्लभेन कर्त्रा शालभञ्जीषु लीना: अतएव पृथक्त्वेनाप्रतीयमाना: सुभ्रुव उन्नीयन्ते इत्यन्वय:। एतेन पुत्तलिकासुन्दर्य्यो: समानशोभत्वं व्यज्यते। इदमादिभि: षोडशभि: श्लोकैर्विजयपुरवर्णनं प्रस्तौति।

२८। 'श्यामा रात्रिस्तस्या रमणश्चन्द्र:। चन्द्रकान्तमणिभिरित्यर्थ:' (A)। विश्राणिताम्भ: दत्तसलिलम्। रात्रौ चन्द्रकिरणसम्पर्कात् चन्द्रकान्तमणिभ्यो सलिलनि:सरणं भवतीति ते आलवाला अयत्नोपगतसलिलमया:। एतेन महासमृद्धिमत्त्वं सूच्यते नगरस्य।

1.—ना :—A ; —ला :—M.

2. —षु—M. —सु—A.

3. —मानभि—R. —मणिभि—A and M.

4. —न्त्यन्ते—M. —क्षन्ते—A.

5. —शोणिताम्भ:—M. —श्राणिताम्भ:—A.

बालाभ्योऽथ प्रणयकलहे रूढकोपाङ्कुराभ्यो[1]
बिभ्यत्यन्ति भ्रूकुटिरचनाचारुभीमाननाभ्यः ॥ ३९ ॥

आत्तं[2] कर्णात् प्रणिहितपदं साञ्जनैरश्रुलेशै-
[3]र्बद्धं तापग्लपितबिसिनीतन्तुना बन्धनेन ।
यत्र स्त्रीणामधररुचकन्यस्तसिन्दूर[4]मुद्रं
तालीपत्रं प्रणयिनि जने प्रेमलेखत्वमेति ॥ ४० ॥

भर्तुः स्वैरं सुरतजनितस्वेदबिन्दून् विनेतुं
यत्र स्नेहादगणित[5]निजग्लानिभिर्मुग्धदारैः ।
सौधोत्सङ्गे[6] शशधररुचस्तन्तुजालप्रविष्टा
व्याकृष्यन्ते[7] रुचिरचमरीबालभारभ्रमेण ॥ ४१ ॥

प्रद्योषाणा:[8] स्तनपरिसराः कुङ्कुमस्याङ्गरागा
दोलाः केलिव्यसनरसिकाः सुन्दरीणां समूहाः[9] ।

---

३९। लोकहितयात् स्वर्गमर्त्त्यया विगलन्ती भीतिर्येषां ते तथा जाता इत्यर्थः। 'अत्र हेतुर्गङ्गा नृपतिपालनञ्च'। (A)

४०। आत्तं गृहीतम्। 'अन्योऽपि आकृष्य पत्रम् अञ्जनेन लिखित्वा तन्तुना बद्ध्वा च प्रेरयति।' 'बिसिनी पद्मिनीत्याद्याः पद्मस्तम्बे' इति वैजयन्ती। तन्तुः सूत्रम्। 'सूत्राणि नरि तन्तवः' इति वैजयन्ती।

४१। चमरीकेशः चन्द्रकिरणाश्च च इत्युभयोरेव शौक्ल्याद् भ्रमः इति भावः। 'तन्तुजालप्रविष्टाः तन्तुरूपेण जाले गवाक्षे प्रविष्टाः' (A).

---

1. —रेभ्या—R. —राभ्यो—A and M.
2. आत्तं—A. सात्तं—M. 3. —बद्धं—A. —रद्धं—M.
4. —न्दुर—M. —न्दूर—A.
5. —लित—M. —णित—A.
6. —धात्सङ्गे—R. —धोत्सङ्गे—M and A.
7. —कृष्यन्ते—R. क्षप्यन्ते—A and M.
8. —णा—M. —णाः—A. 9. —हः—R and A. —हाः—M.

क्रीडावाप्यः प्रतनुसलिला मालतीदाम रात्रिः
स्यान[1]ज्योत्स्ना मुदमविरतं कुर्वते यत्र यूनाम् ॥ ४२ ॥

भ्राम्यन्तीनां तमसि[2] निविड़े वल्लभाकाङ्क्षिणीनां
लाक्षारागा[3] श्चरणगलिताः पौरसीमन्तिनीनाम् ।
रक्ताशोकस्तवकललितैर्बालभानोर्मयूखै
र्नालक्ष्यन्ते रजनिविगमे पौरमार्गेषु यत्र ॥ ४३ ॥

रत्नैमुं क्तामरकतमहानीलसौगन्धिकाद्यैः
शङ्क्वै[4]र्लीलावलयरचनाबन्धुभि[5]र्विद्रुमैश्च ।
लोपामुद्रारमणमुनिना पीतनिःशेषवारः
श्रीः[6]सर्व्वस्वं हरति विपदं[7] यत्र रत्नाकरस्य ॥ ४४ ॥

मूकीभूतां मरकतमयीं हारयष्टिं दधाना
यस्मिन् बाला मृगमदमसीपिच्छिलेषु स्तनेषु ।

---

४२ । क्रीडावाप्यः क्रीडासराः । प्रतनुसलिलाः स्वल्पनीराः । स्यानज्योत्स्ना म्लानज्योत्स्ना रात्रिरित्यस्य विशेषणम् । युवजनानन्दहेतुर्निखिल एव पदार्थस्तत्र वर्त्तते विजयपुरे इति विजयपुरस्य माहात्म्यातिरेक इति भावः ।

४३ । स्तवकः समूहः । नालक्ष्यन्ते ईदृकतया नानुभूयन्ते लाक्षारागो बालसूर्य्यमयूखश्च उभयो रक्तत्वादिति भावः । तथा च तत्र पुराङ्गना निःशङ्कं रात्रौ वल्लभानभिसरन्तीति गम्यते ।

४४ । लोपामुद्रारमणमुनिना अगस्त्येनेति यावत् । पीतनिःशेषवारः पीतनिखिलसलिलस्य । विद्रुमः प्रवालः । 'विद्रुमो ना प्रवालोऽस्त्री' इति वैजयन्ती । विविधरत्नादीनां तत्र सद्भाव इत्यहो महैश्वर्य्यं विजयपुरस्य ।

1. स्यान—A. स्थान—M. 2. समसि—A. तमसि—M and A.
3. —गा—M and A but it is omitted in R.
4. —ङ्क्वै—M. —ङ्खै—A.
5. —भि—M and A. missing in R.
6. श्री—R and A. श्रीः—M. 7. —पदं—R and A. —पुसं—M.

चेतोवर्त्ति[1] स्मरहुतवहं दीपितं स्नेहपूरैः
ज्ञात्वा यान्ति प्रियतमगृहान् अन्धकारे घनेऽपि ॥ ४५ ॥

नीतं यस्मादविनयलिपेः पत्त्रतामायताक्ष्या
निर्गच्छन्त्यः सपदि हृदयं क्षालयित्वेव यत्र ।
कान्ते पादप्रणयिनि मिलत्कज्जलश्यामलानाम्
उन्मुच्यन्ते नयनपयसां श्रेणयो मानिनीभिः ॥ ४६ ॥

अग्रे तेषां व्यपगतमदः स्थातुमेवासमर्थो
दृष्ट्वा कान्तिं कुसुमधनुषः का कथा विक्रमस्य ।
सुभ्रू[2]लीलाचतुरनयनक्षेपरम्यैर्विलासै-
र्यस्मिन् यातास्तदपि सुदृशां किङ्करत्वं युवानः ॥ ४७ ॥

त्वय्यासीने मनसिजगुरौ यत्र सारङ्गनेत्राः
सन्दृश्यन्ते रचितचतुरोद्यानदोलाविलासाः ।
अभ्यस्यन्त्यः[3] सरभसमिव[4] व्योमकान्तारयानं
कन्दर्पस्य त्रिदिवयुवतीं जेतुकामस्य सेनाः ॥ ४८ ॥

---

४५। कामातिरेकादन्धकारादिजनितां बाधां न गणयन्तीति भावः ।

४६। 'एतेन मानभङ्गो व्यज्यते। बाष्पमोचणात् मानभङ्गो जायते इति कवि-परम्परा।' (A) वल्लभकर्त्तृकपादग्रहणात्तत्त्ययुवतीनां मानभङ्गो नान्यथेति भावः।

४७। 'तेषां यूनाम्'। (A) व्यपगतमदः दूरीभूतगर्व्वः। असमर्थः कामः इति शेषः। सौन्दर्य्येण तिरस्कृतमदना अपि यतत्या युवानः सलीलकटाक्षमाक्षेपैः यत्रत्य-युवतीनां किङ्करत्वं भजन्ते इत्येतादृशं रूपाधिक्यं पाटवञ्च तत्रत्यसुन्दरीणामिति भावः।

४८। सरभसं सहर्षम्। स्वर्लोकाङ्गनाभ्योऽपि समधिकरमणीया विजयपुरकामिन्य इति भावः।

---

1. —र्त्तिं—M. —र्त्तिं—A.   2. —भ्र—R. —भ्रू—M and A.

3. —न्तः—M and A. But the correct reading appears to be—न्त्यः and in marginal note in A the word is explained as अभ्यासं कुर्व्वत्य इव।

4. —स इव—M. —समिव—A.

प्रासादानां दिनपरिणतौ [1]गर्भदग्धागुरूणां
जालोद्गीर्णः [2]सजलजलदश्यामलो यत्र धूमः ।
सद्यःक्रीडाकुतुक[3]रभसारूढपौरीमुखेन्दु-
ज्योत्स्नासङ्गप्रसृमरतमःश्रेणिशङ्कां तनोति ॥ ४९ ॥

व्यर्थीभूतप्रियसहचरीचाटुवाचां निशीथे
रोषादस्त्री[4]कृतकुवलयोत्तंसविस्रंसि[5]माल्यम् ।
यूनां यत्र प्रणयकलहं केलिहर्म्याग्रभाजाम्
इन्दुः प्रत्यादिशति सविधीभूय शश्वत् करेण ॥ ५० ॥

तत्र स्वेच्छारतिविनिमये चैव सीमन्तिनीनां
कर्णोत्तंसे प्रकृतिसुभगं केतकीगर्भपत्रम् ।
उत्पश्यन्ति व्यतिकरचलत्कुण्डलाघट्टनाभि-
भिन्नं साक्षादिव मुखविधोः खण्डमेकं विदग्धाः ॥ ५१ ॥

---

४९ । दिनपरिणतौ सायम् । जालोद्गीर्णो गवाक्षद्वारेण विनिर्गतः । प्रसृमरं पलायनपरम् । सायं तत्र चन्द्राननाभिः सुन्दरीभिरालोकिता इव विभान्ति प्रासादा इति भावः ।

५० । अस्त्रीकृतं कलहे अस्त्रस्वरूपतामापादितं । कुवलयोत्तंसात् कुवलयनिर्म्मित-शिरोभूषणात् विस्रंसि अधःपतितं माल्यं यत्र कलहे तत् कलहम् । यूनां युवानश्च युवत्यश्च तेषाम् इत्येकशेषः । प्रत्यादिशति निराकरोति । करेण हस्तेन अथच किरणेन । इन्दु-किरणानां कामोद्दीपकत्वात् तद्दर्शनतः स्वत एव प्रणयकलहो दूरीभवतीति इन्दुकर्त्तृकं कलहनिराकरणमुत्प्रेक्ष्यते ।

५१ । विदग्धा रसिका इति यावत् । 'छेको विदग्धः' इति हेमः ।

---

1. ग—M and A but missing in R.
2. स—M and A but missing in R.
3. —तक—R. —तुक—M and A.
4. —स्त्री—A. —स्त्री—M.
5. —स्रंसि—A. —स्रंसि—M.

वाचः श्रोत्रामृतमनुगतभ्रूविलासाः कटाक्षाः
रूपं हस्तोच्चयसमुचितं[1] स्निग्ध[2]मुग्धाश्च हावाः[3] ।
यातं लीलाञ्चितमकृतकं यत्र नेपथ्यमेतत्
पौरस्त्रीणां द्रविणसुलभा प्रक्रिया भूषणाय ॥ ५२ ॥

पुञ्जीभूतं जगदिव ततः सप्तकक्षा[4]निवेशे
रम्यं यायाः भवनमवनीमण्डलाखण्डलस्य ।
यत्सौधानां शिखरि[5]सुहृदां मूर्ध्नि विश्रान्तमेघे
विद्युल्लेखा वितरति मुहुर्वैजयन्तीविलासम् ॥ ५३ ॥

स्निग्धश्यामैरिव विरचिता दारितै[6]रिन्द्रनीलै
र्वापी तस्मिन्नवनिवनितारम्य[7]रोमावलीव ।
यस्यास्तीरे विहरदनतिप्रौढसीमन्तिनीनां
मन्ये लीलागतिषु गुरवो राजहंसा भवन्ति ॥ ५४ ॥

देवं साक्षान्मनसिजमिव प्राप्तराज्याभिषेकं
सेवेथास्त्वं व्यथित[8]समये चामरग्राहिणीभिः ।

---

५२। 'दग्धमुग्धाः भस्मसंसर्गेण मनोहराः' इति (A) ग्रन्थधृत-पाठव्याख्या। लीलाञ्चितं लीलायुक्तम्। अकृतकम् अकृत्रिमम्। द्रविणं धनम्। 'वित्तं च द्रविणं द्युम्नं हिमरूप्यात्मकं च तत्' इति वैजयन्ती। स्वभावसुन्दर्य्यः सत्यः कामिन्य आहार्य्यं भूषणं नापेक्षन्ते इति भावः।

५३। अवनीमण्डलाखण्डलस्य नरपतेरिति यावत्। शिखरिसुहृदां पर्व्वतसदृशानाम् अत्युन्नतत्वादिति भावः। 'पताका वैजयन्ती स्यात्' इत्यमरः।

५४। दारितैः विदीर्णैः। द्रावितैरिति पाठे तु द्रवीकृतैः।

---

1. —हितं—M. —चितं—A. 2. दग्ध—R and A. स्निग्ध—M.
3. —राः—R and A. —वाः—M. 4. —चा—M. —क्षा—A.
5. —खिरि—R. —खरि—M and A.
6. दारितै—R and A. द्रावितै—M. 7. —रा—A. —री—M.
8. —व्यथित—M. —कथित—A.

यस्य स्निग्धस्फुरदसिलतास्फार[1]गत्या जलानां[2]
लब्धः संख्ये रिपुकुलवधूलोचनैः[3] संविभागः[4] ॥ ५५ ॥

यस्यौत्सुक्यादसमसमरालोकनोन्माद[5]भाजां
स्वर्गस्त्रीणामपरिगणितस्रस्तचेलाञ्चलानाम्[6] ।
मन्ये धारा[7]चतुरतुरगोत्खातरेणुप्रतानः
सद्योलग्नः स्तनकलसयोरन्त[8]रीयत्वमेति ॥ ५६ ॥

भुग्नग्रीवं भुजविसलता[9]सक्तवक्त्राम्बुजाभिः
सोऽयं [10]सेनान्वयनृप इति त्रासकौतूहलाभ्याम् ।

---

५५। चामरग्राहिणीभिः सह इत्यर्थः। यस्य लक्ष्मणसेनस्य स्निग्धस्फुरदसिलतायाः स्फारगत्या गुरुगत्या रिपुकुलवधूलोचनैः सह जलानां संविभागस्तुल्यो भागो लब्धः इत्यन्वयः 'स्फारं वरिष्ठं विस्तीर्णं ततं बहु महद् गुरु' इति हेमः। लक्ष्मणसेनेन असिलतासञ्चालनमात्रेण बहुरिपुसंचयः कृत इति ध्वनिः। अरिनगर्यादीनां वर्णनप्रसङ्गत इदमादिना श्लोकपञ्चकेन लक्ष्मणसेनस्य प्रतापातिशय्यं सूचयति ।

५६। 'चेलं वसनमंशुकम्' इत्यमरः। धारा अश्वगतिविशेषः। 'गतयोऽमूः पञ्च धाराः' इत्यमरः। अमराङ्गना अपि सविस्मयं तदीयं युद्धम् अवलोकयन्तीत्येतादृशं समरपाटवं लक्ष्मणसेनस्येति भावः।

---

1. —स्फा—R. —स्फा—A. —धा—M.
2. —लानां—A. —नानां—M.
3. —नैः—A. —नै—M.
4. —गाः—R. —गः—M and A.
5. —न्मद—R. —न्माद—A and M.
6. —चेलाञ्चला—A. —लीलाञ्चला—M. —लीलाञ्चना—R.
7. राधा—M. धारा—A.
8. —न्त—A. —रन्त—M.
9. —लसता—R. —सलता—A and M.
10. —सेना—M and A. —सेवा—R.

विष्वक् पीतः कुवलयदल[1]श्रेणिदीर्घैः कटाक्षैः
पौरस्त्रीभिः सपदि नगरीविद्रवे[2] विद्विषां यः ॥ ५७ ॥

यत्राक्रन्दा[3] विहगवदितैर्बिभ्रती चैतसीव
क्रीडागारे सुचिरलिखितामाकृतिं वल्लभस्य ।
प्रौढारामा यदरिनगरी सौधसञ्जातदूर्वा-
जालव्याजादलकपटलीं दूरनम्रां बिभर्त्ति ॥ ५८ ॥

क्रीडारोषे सुतनुचरणा[4] हन्यमानस्य पत्युः
प्रत्युद्गच्छत्पुलकपटलेनापि बाधां दधाना ।
भ्राम्यत्यद्रेर्वनभुवि कथं क्रूरदर्भाङ्कुरायाम्
एवंप्रायो[5] यदरिनगरीशारिकाणां विलापः[6] ॥ ५९ ॥

तस्मिन् काले क्वचिदपि स चेद्दासरस्य विभागं
राजा शक्तो गमयति रहश्चिन्तयन्नन्तरायान्[7] ।

---

५७। विष्वक् सर्व्वतः। विद्विषां नगरीविद्रवे शत्रुनगराणाम् आक्रमणकाले इति यावत्। विद्रव इति पाठे तु उपचारात् शत्रुनगराणामाक्रमणकारक इत्यर्थः। शत्रुनगराव-रोधवेलायामपि शत्रुकामिन्यः सकौतुकमेतस्मिन् बद्धनेत्रा भवन्तीत्यहो सौन्दर्य्यातिरेको लक्ष्मणसेनस्येति भावः।

५८। यस्य लक्ष्मणसेनस्य अरिनगरी शत्रुपुरी शत्रुजनानां वधात् पलायनाद्वा सर्वथा निर्जना जातेति तत्रत्याः सौधनिचयाः तृणाकीर्णा विहगरवमुखराश्च संवृत्ता इति भावः।

५९। 'पीडा बाधा व्यथा दुःखम्' इत्यमरः। अतितरां सुखोचिता अपि यदीयाः शत्रुकामिन्यः पतीनां वधात् पलायमानाः पर्वतविचरणादिक्लेशमपि सहन्ते इति भावः।

---

1. —दल—M and A. But missing in R.
2. —वी—A. —वे—M.
3. —त्राक्रन्दा—R. —त्रानुत्रा—A. —त्राक्रन्दा—M.
4. —चरणा—M. —चरणा—A. 5. —यो—A. —या—M.
6. —स:—R. —पः—M and A.
7. —यान्नन्तरायान्—R. —यन्नन्तरायान्—A and M.

सन्देशो मे न पवन तदा किञ्चिदावेदनीयः
कार्य्योत्तमे मनसि लभते नावकाशं विलासः ॥ ६० ॥

प्रासाद्यातः कमपि[1] समयं सौम्य वक्तुं विविक्ते
देवं नीचैर्विनयचतुरः कामिनं[2] प्रक्रमेथाः ।
अप्यन्येषु प्रणयिभिरभिव्यञ्जितः[3] कार्य्यभागः
सिद्धिं गन्तुं प्रभुरवसरे किं पुनः पार्थिवेषु ॥ ६१ ॥

श्रीखण्डाद्रेर्वसति शिखरे कोऽपि गन्धर्वलोक-
स्तत्रास्त्येका कुवलयवती नाम [4]मान्याङ्गनानाम् ।
दूतं तस्याः कलय[5] मलयो[6]पत्यकामारुतं मां
कामिद्वन्द्वं घटयति मिथो विप्रयुक्तं य एकः ॥ ६२ ॥

जित्वा देव त्वयि सरभसं दाक्षिणात्यान् क्षितीशान्
प्रत्यावृत्ते मलयकटकाच्चित्तमादाय तस्याः ।

६० । वसीयो भागः विभागः । शक्तः शक्तिशाली ।

६१ । विविक्ते रहसि निर्ज्जने स्थाने इति यावत् । प्रभुः समर्थः ।

६२ । मान्याङ्गनानां माननीयस्त्रीणाम् । कलय अवगच्छ । वसन्ते मलयपवन-प्रवहणावसरे एव विप्रयुक्तानां कामिनां मेलनस्य अनुभविकत्वात् मलयस्य कामिद्वन्द्व-घटकत्वमुपवर्णितम् ।

1. कथमपि—A. कमपि—M. 2. —नां—R and A. —नं—M.

3. —रीभ्यञ्जित—A. —भिव्यञ्जित—M.

4. म—M and A. But in the latter it is corrected into — in the margin.

5. —यी—R. —य—M and A.

6. मलयो—M and A, but missing in R.

दूरं याते[1] कमितरि वृथा वृत्तिरस्येति[2] तस्या
वाष्पोत्पीड़ा सपदि पदवीं संरुरोधेक्षणस्य[3] ॥ ६३ ॥

विन्यस्याग्रं भुवि चरणयोः कौतुकोत्तम्भिताक्षी
त्वत्सम्पर्कप्रकृतिसुभगामुन्नतग्रीवमाशाम् ।
उत्पश्यन्ती[4] किमपि सुतनुर्लक्ष्यते सौधशृङ्गाद्
उद्भिन्नाश्रुस्थगित[5]मसकृत् त्वत्समीपं यियासुः ॥ ६४ ॥

यस्मिन्[6] काले नयनविषयं साहसिन्यासि[7] नीतः
सारङ्गाक्ष्याः[8] सकलललना[9]लोचना[10]नन्दकारिन् ।
जाने तस्मात् प्रभृति[11] जनितस्वान्तसन्तापखेदा
सा रम्येषु क्वचिदपि न विश्वासमेकान्तमेति ॥ ६५ ॥

---

६३। सरभसं सवेगम्। मलयकटकात् मलयसानुदेशात्। कमितरि प्रिये दूरं गते सति अस्य ईक्षणस्य वृत्ति वृथा इत्यन्वयः। वाष्पोत्पीडा सपदि ईक्षणस्य पदवीं संरुरोध इत्यन्वयः। लोचनयोर्वाष्पाकुलतया तिरोहितासीत् तस्या दर्शनशक्तिरिति भावः।

६४। उत्तम्भिताक्षी विस्फारिताक्षी। "संवृतं पिहितं छन्नं स्थगितं चापवारितम्" इति हेमः। इदमादिभिः पञ्चविंशद्भिः श्लोकैः कुवलयवत्या विरहावस्थावर्णनं प्रस्तूयते।

६५। साहसिन्या कुवलयवत्या नयनविषयं दृक्पथं नीतः प्रापितः असीत्यन्वयः। 'वातकी हरिणे पुंसि सारङ्गः' इत्यमरः।

---

1. —ते—R. —ने—M.

2. कमितरि वृथा वृत्तिरस्येति—A. किमित्तरियावृतिरश्येति—M.

3. —धेक्षणस्य—M. —ध चक्षस्य—A.

4. —पश्यन्ती—M. —पत्स्यन्ती—A. which has been corrected in the margin into—पश्यन्ती।

5. —स्थकित—A. स्थगित—M. 6. न—M and A. द—R.

7. —हसिन्यासि—A. —षु धन्योऽसि—M. But in R there seems to have been a lacunae here.

8. —क्ष्याः—M. —क्ष्याः—A.

9. —ललना—M and A. It is missing in R.

10. —नन्द—M and A. न is missing in R.

11. —ति—M and A. —त—R.

मुष्टिग्राह्यं किमपि विधिना कुर्वता मध्यभागं
मन्ये बाला कुसुमधनुषो निर्म्मिता कार्म्मुकाय ।
राजन्नुच्चैर्विरहजनितक्षामभावं[1] वहन्ती
जाता सम्प्रत्यहह सुतनुः सा च मौर्वी लतेव ॥ ६६ ॥

कीदृक्[2] कान्तः कथय तरले वर्त्तते यस्तवान्त
र्यन्नादित्थं सुभग बहुशः [3]पृष्टयालीजनेन ।
निःश्वस्योच्चैः कथमपि तया स्तम्भिताश्रुप्रवाहा
न्यस्ता दृष्टिर्लिखितमदने भित्तिभागे गृहस्य ॥ ६७ ॥

धत्ते सद्यस्त्वदुपगमितप्रेमलेखभ्रमं सा
तालीपत्रे प्रियसहचरीकर्णपाशच्युतेऽपि ।
किञ्च क्रीड़ाशुकमपि मुहुः[3] पृच्छति त्वत्प्रवृत्तिं
गाढ़ोद्भूतः क्व खलु गणयत्यन्वयं त्वयि भावः ॥ ६८ ॥

नोत्तंसत्वं[4] दृशमपि नयत्युत्पले बद्धकोपा
माल्यैः क्लान्ता न भुजलतिकामप्यसौ संवृणोति ।
पद्मोद्विग्ना हृदयनिहितात् तापसंपत्तिहेतोर्
आलीहस्तादपि च सहसा [5]मौलिताक्षी विभेति[6] ॥ ६९ ॥

६६। क्षामः क्षीणः। स्वत एव तन्वी सा विरहपीड़या तनुतरा सञ्जातेति भावः।

६७। कान्तस्य मदनसदृशत्वं सूचयतीति भावः।

६८। कर्णपाशः सुन्दरकर्णः। 'पाशो रज्जौ कर्णशब्दात् परः कर्णातिशायने', इति वैजयन्ती। एतेनोन्मादरूपोपवर्णिता कामदशा।

६९। उत्तंसत्वं कर्णभूषणत्वम्। एतेन दृशोरुत्पलसादृश्यं हस्तयोर्माल्याकारत्वं आलीहस्तानाञ्च पद्मतुल्यत्वं द्योतितम्।

1. —वं—M and A. —ं—R. 2. —क्—M anJ A. —क—

3. —पृष्ठ—M. पृष्ट—A. 4. मुहुः—M and A. Omitted in R.

5. —त्त्वं सत्वं—M. —त्तंसत्वं—A. 6. मौ—M and A. मि—R.

7. —भेति—M and A. —भाति—R.

अभ्यस्यन्ती सरसकुसुमस्वस्तरी: प्रान्तसुप्ता
शुष्यत्पङ्कप्रकरसफरीसम्भ्रमोद्वर्त्तितानि ।
धारावाष्पं नयननलिनीनालतां चानयन्ती[1]
मन्ये बाला गमयति पुन: सा कथञ्चिद्दिनानि ॥ ७० ॥

अन्तस्तापं तुहिनपयसामप्यनुच्छिद्यमाप्य
त्वत्तो बाला मलयज[2]रज:[3]स्रोतसामप्यसाध्यम् ।
धत्ते निन्दां कुसुमविशिखेऽत्यन्तसाहस्यमूढ़ा
सुस्थापि स्यात् किमुत[4] विरहव्याकुला विभ्रमिण्य:[5] ॥७१॥

द्वेष: क्रीड़ाविपिनवसतौ[6] चन्दनाम्भोनिषेध:
प्रत्याख्यानं सरसनलिनीतालवृन्तानिलस्य ।
जातस्तस्यां कथमपि सखीबुद्धिज[7]स्त्वद्वियोगे
मूर्च्छावेगव्यपगमविधेरेष एव प्रकार: ॥ ७२ ॥

धत्ते द्वेषं शशिनि कुरुते न ग्रहं केशहस्ते
दूरे हारं क्षिपति रमते निन्दया चन्दनस्य ।

७० । स्वस्तरी: कल्पद्रुमस्य । प्रकर: समूह: । कल्पद्रुमसन्निधानेऽपि तस्या ईदृशी अवस्थेत्यहो दु:सहा तदीया विरहपीड़ा इति व्यज्यते ।

७१ । सुस्थापि अत्यन्तसाहस्यमूढ़ा स्यात् किमुत विरहव्याकुला विभ्रमिण्य इत्यन्वय: ।

७२ । मूर्च्छावेगव्यपगमविधे: कथमपि सखीबुद्धिज एष एव प्रकारो जात इत्यन्वय: । सखीवचनतो लीलोद्यानगमनादीनां कामोद्दीपकानां प्रत्याख्यानात् कथञ्चित् मूर्च्छावेगोपशमो जात इति भाव: ।

---

1. The reading of the line as given in the text is found in A. R has धारावाष्पं नयनगलनीलालतां चालयन्ती M. has धारावाष्पैर्नयनगलितै: कुन्तलं चालयन्ती ।

2. —ज—M and A. Omitted in R.

3. —स्रो—M and A. —श्रो—R. 4. —मुत—A. —मिह—M.

5. —न्य:—M. —ण्य:—A. 6. —सतौ—M and A. —सुतौ—R.

7. —ज—M and A. Omitted in R.

वक्तुं देव त्वयि परमसौ स्वाम[1]वस्थां कथञ्चिद्
गाढोद्वेगा नयति कविताचिन्तया वासराणि ॥ ७३ ॥

आदौ यातो[2] नयनपदवीं स्तम्भयन् पक्ष्ममालां
चुम्बन् गण्डस्थलभुवमथो पीतबिम्बाधरोष्ठः[3] ।
कुर्वन् कण्ठग्रह[4]मपि कुचोत्सङ्गशय्याशयान-[5]
स्तस्या वाष्पः किमिव न खलु त्वद्वियोगी करोति ॥ ७४ ॥

शारङ्गाक्ष्या जनयति न यद् भस्मसादङ्गकानि
त्वद्विश्लेषे स्मरहुतवहः श्वाससन्धुक्षितो[6]ऽपि ।
जाने तस्याः स खलु नयनद्रोणिवारां प्रभावो
यद्वा शम्बरूप तव मनोवर्त्तिनः शीतलस्य ॥ ७५ ॥

शान्तप्राये रजनिसमये किञ्चिदामीलिताक्षी
प्राप्य स्वप्ने[7] कथमपि पुरस्त्वामतिप्रौढरागा ।

---

७३ । केशहस्ते केशसमूहे । "पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे" इत्यमरः । अत्यन्त वीतरागा सा त्वच्चिन्तयैव दिवसमतिवाहयतीति भाव. ।

७४ । त्वद्विरहे अनारतं रोरुद्यमानायाः कुवलयवत्या वाष्पराशिर्गण्डस्थलादिषु प्रवहतीति भावः ।

७५ । सन्धुक्षितः उद्दीपितः । 'द्रोणिः काष्ठाम्बुवाहिनी' इत्यमरः । नयने द्रोणी इव द्रोणिविशेषस्य नयनाकारत्वादिति भावः । रोदनादेव तस्या मदनतापः कथञ्चिदुपशमं गतः, जितकामस्य शान्तस्य भवतोऽविच्छिन्नचिन्तया वा इति भावः । प्रसिद्धा च रोदनेन दुःखस्य शीतलेन तापस्य चोपशान्तिः ।

---

1. मामा—R. माम—M. स्वाम—A.
2. —ते—M. —तो—A.
3. —रोष्ठ:—R. —रोष्ठ:—A. —रोष्ठ:—M.
4. —ग्रह—M and A. —ग्रह—R.
5. —न—M. —नु—A. 6. —न्धुक्षितो—A. —न्धुक्षिपे—M.
7. —प्ने—M and A. —प्ने—R.

[1]स्निह्यन्ती त्वां[2] तनुमनुपदं विप्रबुद्धाथ[3] बाला
लज्जालोलं वलयति मुखं सा सखीनां मुखेषु ॥ ७६ ॥

चन्द्रादस्या[4]मुपवनभुवं दूरतो द्वेष्टि बाला
नालापञ्च क्वचन कुरुते सार्द्धमालीजनेन ।
रक्षाहेतोः स्मरविशिखतः[5] केवलं सा वराकी
धत्ते लीलाफलकमुरसि त्वत्प्रतिच्छन्दशोभि[6] ॥ ७७ ॥

विन्यस्यन्ती[7] शशिनि नयने दुर्द्दिनैरश्रुवारां
धाराश्वासै[8]र्वकुलकुसुमामोदमाघ्रातुकामा ।
शुश्रूषुश्च भ्रमरविरुतं मूर्च्छया रक्षितासौ
वीक्ष्यावस्थां क इव करुणाकातरः स्यान्न तस्याः ॥ ७८ ॥

७६ । विप्रबुद्धा जागरिता वलयति सञ्चालयति । निद्रावसरेऽपि—का कथा कालान्तरेषु—सा त्वच्चिन्तारता स्वप्नेषु त्वत्सङ्गमसुखमनुभवतीति भावः ।

७७ । स्मरविशिखतः कामबाणतः । प्रतिच्छन्दः प्रतिकृतिः । सौन्दर्य्येण पराक्रमेण वा जितकामस्य भवतश्चित्रफलकं भवत्प्रतिपक्षभूतस्य मदनस्य भयोत्पादनार्थं मदनार्त्ता स्वोरसि धारयतीति भावः ।

७८ । अश्रुभिः चन्द्रदर्शनात् दीर्घश्वासैर्वकुलकुसुमगन्धाघ्राणात् मूर्च्छया च भ्रमरशब्द-श्रवणात् वारिता सा इत्यर्थः । अश्रुपतनादिकारणात् चन्द्रदर्शनाद्युद्वेजककृत्यसम्पादनेऽसमर्था सेति अश्रुपतनादयोऽपि तस्या उपकारायैव संवृत्ता इति भावः ।

1. स्नि—M and A. स्नि—R.

2. द्वां—A. where it has been corrected into त्वां in the margin. त्वां—M.

3. —द्धाथ—M and A. But द्धा is the grammatically correct reading.

4. —स्या—M and A. —स्या—R. 5. —खितः—M. —खतः—A.

6. —भि—M. —भिः—R and A.

7. —स्यन्ती—M and A. —श्यन्ती—R.

8. —श्वासै—M and A. —श्वासैः—R.

चेतोवृत्तिः स्फुरति करुणा विप्रयोगे विरागः
कोपावेशः कुसुमविशिखे नित्यमात्मन्यवज्ञा[1] ।
इत्थं [2]स्वाङ्के स्थितमिव समालम्ब्य चित्रा वराकी
त्वय्येकान्तस्थिरविरचितं भावमाविष्करोति ॥ ७९ ॥

प्रागालापाः प्रतिमुहुरपि प्रेमरम्याः सखीनां
त्वय्येकान्तव्यपगतदये सङ्गमाशापि नैव ।
तस्याश्चिन्तां[3] विरहजनितां[4] नाथ विस्मारयन्ती[5]
मूर्च्छैवेका[6] भवति सततं [7]जीवितालम्बनाय ॥ ८० ॥

तस्या राजन्ननुभवमना[8]सायहस्तावरोधाद्
गण्डाभोगे नयनसलिल[9]स्रोतसा क्षालितोऽपि ।
प्रत्यासन्नः स्तनपरिसरे चेतसा त्वां वहन्त्याः
प्रालेयांशुर्नृपतिककुदच्छत्रभङ्गीं बिभर्त्ति ॥ ८१ ॥

---

७९ । चित्रमेतद् यत् सा भवति एकान्ततोऽनुरक्ता तद्विरहे भवतः क्लेशादिकमेवा-लोचयति न तु आत्मन इति भावः ।

८० । केवलं मूर्च्छावकाश एव सा त्वच्चिन्ताविरहिता भवति नान्यदेति भावः । एवञ्च चिन्ताविच्छेदादविच्छिन्नचिन्तापरम्परा तस्या मृत्युकारणं न भवतीत्यर्थः ।

८१ । प्रत्यासन्नः प्रतिबिम्बितः । प्रालेयांशुश्चन्द्रः । ककुदो राजचिह्नम् । गण्डादिषु प्रतिबिम्बितश्चन्द्रः तदीयहृदयगतस्य राज्ञो भवतश्छत्रम् इव शोभते इति भावः ।

---

1. —त्मन्यवशा—A. —मैन्यवज्ञा—M. where a sign of query was put after न्य indicating the obscurity of the passage.

2. स्वा—M. र—A. where it has been corrected into स्वा in the margin.

3. —न्तां—A and R. —न्ता—M. 4. —तां—A and R. —ता—M.

5. —स्मारयन्ती—R. —श्मारयन्ती—M and A.

6. मूर्च्छैवेका—A. मुच्चैरेका—R. उच्चैरेका—M.

7. जीवि—M and A. जीव—R.

8. —ना—M and A. —न—R. 9. —ल—M and A. —ला—R.

यातः क्रच्छ्रा[1]त्तुहिनसमयः सम्प्रति त्वत्सकाशाद्
आगच्छन्तीं [2]पवनलहरीमप्यनासादयन्त्याः[3] ।
कः सन्नद्धे[4] परभृतवधूकेलिवाचालत्वोले
चैत्रे तस्याः कथय सुभग प्राणरक्षाभ्युपायः ॥ ८२ ॥

भूयोभूयः प्रविशति मनो दारुणे मन्मथाग्नौ
मग्नं वाष्पाम्भसि नयनयोर्द्वन्द्व[5]मिन्दीवराक्ष्याः ।
तस्या राजन्ननुविरहव्याकुलायास्तपस्वी
जातो भस्मच्छुरित इव स क्षामपाण्डुः कपोलः ॥ ८३ ॥

राज[6]न्नुर्वीवलयवनिताकामुक त्वत्सकाशा-
दाशातन्तुर्भवतु सुदृशो दुर्लभः प्रेमतन्तुः ।
कष्टात् कष्टं पुनरिदमहो स्वप्न[7]सङ्केतदूतो
निद्राप्यस्याः क्षणमपि न यन्नेत्रसीमानमेति ॥ ८४ ॥

---

८२। हिमर्त्तौ उत्तरतो वायोः प्रवहणात् दक्षिणदिग्वर्त्तिन्यास्तस्या उत्तरदेशावस्थितस्य राज्ञः सकाशादागच्छतो वायोरुपलम्भो ग्रीष्मे तु दक्षिणतो वायोः प्रवहणात् न तथा इति भावः ।

८३। द्वन्द्वं युगलम्। छुरितः व्याप्तः। मदनानले मानसं प्रविशति दुःखेन मानसात्मीयभूतं नयनयुगलं रोदनपरं भवति कपोलश्च भस्मनात्मानमाच्छादयति आत्मीयान्तरमिवेति भावः। मदनतापेन पाण्डुतां गता सा सततं रोदितीति सूच्यते ।

८४। निद्राभावात् स्वप्नेऽपि सा त्वत्सम्भोगसुखमुपभोक्तुं नालं भवतीत्यहो अतिदारुणं तस्या भागधेयमिति भावः।

---

1. —च्छ्रा—A and M. —च्छ्र—R. 2. प—M and A. स—R.
3. —स्वादयन्त्याः—M and A. —भादयन्त्याः—R.
4. —न्नद्धे—A. —म्नम्वे—R. —म्बद्धे—M.
5. —र्द्वन्द्व—A. —र्बन्ध—M.
6. —न्न—M and A. —ना—R.
7. —प्न—A. —प्र—M.

प्रत्यावृत्ताः[1] स्तनपरिसराच्चन्दनस्फीतमूर्त्तेः
श्वासा एव[2] स्मरहुतवहोद्दीपनैकप्रगल्भाः ।
तामुत्कण्ठाकुलितहृदयां खेदयन्ति प्रकामं
संप्राप्यन्ते मलयपवनैरेवमेवायशांसि ॥ ८५ ॥

त्वद्वृत्तानुस्मरणरसिका कातरा च प्रकामं
ज्योत्स्नासेके द्विजपतिमधिक्षेपपात्रं[3] करोति ।
किञ्च द्वेष्टि त्रिदशभिषजौ सुन्दर त्वां विचिन्त्य
प्रायेणैवं भवति विधुरासन्नमृत्योर्मनीषा ॥ ८६ ॥

सा वैरस्याद्दसितनयना हैमतालीदलानां[4]
प्रत्याख्यानात् प्रकृतिसुभगं कर्ण[5]पाशं बिभर्त्ति ।
तद्‌गात्राणां किमपि सहसा दुर्बलत्वं विचिन्त्य
त्यक्तं त्रासाद् गुणमिव मनोजन्मना कार्म्मुकस्य ॥ ८७ ॥

८५। मलयपर्व्वतोऽपि चन्दनवृक्षभूयिष्ठ इति लिप्तचन्दनस्य स्तनपरिसरस्य मलयरूपेण तत्प्रभवस्य श्वासस्य च मलयपवनरूपेण कल्पनम्। श्वासानां च वायुस्वरूपतया अनलात्मकस्य मदनस्य श्वासेनैवोद्दीपनं भवतीत्याशङ्का मलयरूपेणोपचरितं श्वासमेव स्वकीयतापकारणतया निन्दतीति भावः।

८६। द्विजपतिश्चन्द्रो ब्राह्मणश्रेष्ठश्च। त्रिदशभिषजौ अश्विनौ द्वेष्टि तयोः सौन्दर्य्यातिरेकस्य प्रसिद्धत्वात्। अन्योऽप्यासन्नमृत्युः शान्तिस्वस्त्ययनादिना औषधादिप्रदानद्वारेण च रोगोपशमनसमर्थं स्वीयमङ्गलनिदानभूतं ब्राह्मणं भिषजं च निन्दतीति ध्वनिः।

८७। वैरस्यात् वैराग्यात्। असितं कृष्णम्। प्रकृतिसुभगं स्वभावसुन्दरम्। हैमतालीदलानां स्वर्णतालपत्राणां कर्णभूषणभूतानामिति यावत्। तद्देहस्य मदनकार्म्मुकसादृश्यात् हैमतालीदलादीनां तदीयभूषणानां तत्कार्म्मुकगुणत्वम्। अतिदुर्बलं धनुर्गुणधारणे

1. —त्ताः—A. —त्ता—M. 2. एव—A. इव—M.
3. —पात्रं—M. —मात्रं—R and A.
4. —लानां—M and A. —थानां—R.
5. कर्ण—A. कर्म—R. कैश—M.

अप्याजन्मप्रभृतिसुहृदश्चन्दनस्यापराधाद्[1]
अध्यास्ते सा न खलु मलयोपत्यकाकाननानि ।
किञ्च द्वेषादुपरि मदनस्येव सर्व्वाङ्गतन्वी
बद्धावेशा मनसि रतये नावकाशं ददाति ॥ ८८ ॥

[2]लीलोद्याने वितरति[3] दृशं[4] यत्नसंरुद्ध[5]वाष्पा[6]
सान्द्रे चन्द्रार्च्चिषि निविशते चन्दनाभ्यक्तगात्री ।
क्रीड़ावापीं[7] मरुदभिमुखं[8] धावति व्याकुलासौ
किं वा[9] नार्य्यो रमणविरहे साहसं नाचरन्ति ॥ ८९ ॥

---

न प्रभवतीति मदनेन दूरीकृतमिव गुणीभूतमलङ्करणादिकमित्युत्प्रेक्षा । सर्व्वतो वीतरागा कुवलयवती अलङ्करणादिकं परित्यक्तवतीति ध्वनिः ।

८८ । रतये आनन्दाय मदनभार्य्यायै च । कदापि न मुदं दधातीति भावः ।

८९ । लीलोद्यानगमनादीनां कामोद्दीपकानां विरहिभिरकर्त्तव्यत्वात् एतेषां साहसत्वम् । स्वजीवनं प्रति अनुरागलवाभावात् अत्यर्थं पीड़िता सा तापातिरेकजनकमपि चन्द्रालोकादिसेवनमाचरति । यद्वा मदनेन तापिततापिता सा लुप्तहिताहितविवेका तापोपचायकमपि कृत्यजातं निःशङ्कमाचरतीति भावः ।

---

1. —श्चन्दनस्यापराधाद्—M and A. —श्चन्दस्यापराधाद—R.

2. लीलो—A पीनो—M.

3. —तरति—A and R. —चरति—M. 4. भ्रशं—M. दृशं—A.

5. —रुद्ध—A and M. —ध्य—R.

6. —स्पा—R —ष्पा—M and A.

7. —पीं—A. —पीमभि—M. where the reading is marked as doubtful.

8. —भिमुखं—M and A. मुखं—R.

9. किम्बा—M and A which form, however, is grammatically wrong, the व here being a semivowel, and not a labial mute. The two grammatically correct forms are किव्वाँ and किंवा । But in verses 94 and 100 also, which follow, we get the reading किम्बा both in M and A.

यातः[1] कण्ठस्थलमपि घनश्वाससात्रावशेषा-
स्तामुत्कण्ठा[2]प्रतनुमसवः सर्वथा न त्यजन्ति ।
लब्ध्वा कण्ठप्रणयमथवा तादृशामङ्गनानां
प्राणास्त्यागे क इव भुवने चेतसा विच्युतोऽपि ॥ ९० ॥

क्षीणस्तापो वपुषि विगता नेत्रयोरश्रुधारा
विश्रान्तानि क्रमकृशतनोरङ्गविक्षेपणानि ।
इत्थं शान्ते विरहजनिते व्याधिरागे मृगाक्ष्याः
श्वासस्तस्याः परमुपचितो [3]निर्वृतेरन्तरायः ॥ ९१ ॥

लीलोद्याने परभृतवधूपञ्चमैः पीड्यमाना[4]
ताम्यन्मूर्त्तिर्मलयमरुता केलिवातायनेषु ।
सा नैकत्र क्वचिदपि पदं कातराक्षी विधत्ते
यत् सत्यं न त्रिभुवनमपि प्रीतये दुःखितानाम्[5] ॥ ९२ ॥

सा सर्व्वत्राप्रतिहतगति[6]र्व्विद्यया सत्यपि त्वां
प्रत्याख्यानात् सुभग सहसा बिभ्यती नाभ्युपैति ।

---

९० । उत्कण्ठाप्रतनुम् उत्कण्ठावशात् क्षामम् । कण्ठागतजीवना अमृतापि मृतप्राया सा मदनतापेनेति भावः ।

९१ । उपचितो वृद्धिं गतः । निर्वृतेः सुखस्य मृत्युरूपस्य । मृतप्रायायास्तस्यास्तिरोहिता निखिला चेष्टा, अवशिष्यते च केवलं श्वास इति भावः ।

९२ । ताम्यन्ती क्लिश्यन्ती मूर्त्तिर्यस्याः सा । लीलोद्यानादिषु सर्व्वत्रैव कामोद्दीपकाः पदार्थनिचयास्तामतितरां पीडयन्तीति भावः ।

1. —ता:—A. —ता—M.
2. —ण्ठां—A. —ण्ठा—M.
3. —निर्वृ—A. —निवृ—M.
4. —ने—M. —ना—A.
5. दुःखितानां—M. दुःखितानां—A and R.
6. —र्व्वि—A and M. वि—R.

राजानो हि प्रकृतिरसवश्चेतसोऽप्यन्यनारीं
रूढ़प्रेमप्रबलवनिताभीरवो नो लसन्ति ॥ ९३ ॥

तस्यास्तीव्रस्मरहुतभुजा दह्यमानाङ्गयष्टे-
र्न्यस्तं सद्यः स्तनपरिसरे चन्दनं शोषमेति ।
उक्तैः किंवा बहुभिरपदारोपितस्वान्तवृत्ते-
स्त्वय्यायत्तः कुवलयदृशो जीवरक्षाप्रकारः ॥ ९४ ॥

इत्याख्याते पुलकिततनुर्मेदिनीपुष्पकेतुः
प्रत्युत्थाय प्रणयसुभगं गाढ़माश्लिष्यति त्वाम् ।
वाक्यैरेभिः [1]करुणमसृणैः कोमलत्वं भजन्ते
ग्रावाणोऽपि प्रकृतिसरसः किं पुनस्तादृशो यः ॥ ९५ ॥

सद्यः कृत्वा पवन विनयादञ्जलिं मूर्ध्नि किञ्चिद्
वक्तव्योऽसौ रहसि भवता मद्गिरा गौडराजः ।
त्वत्तः श्रोष्यत्यवहितमना: सोऽनुरक्ताङ्गनानां
जायन्ते हि प्रणयिनि सुधावीचयो वाचिकानि ॥ ९६ ॥

---

९३। प्रत्याख्यानात् बिभ्यतीत्यन्वयः। लसन्ति कामयन्ते। प्रत्याख्यानभयादेव सा भवदन्तिकं नोपैति इति भावः। उक्तञ्च 'अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे' इति

९४। अपदारोपितस्वान्तवृत्तेः दुर्लभजनानुरक्तचित्ताया इत्यर्थः।

९५। मेदिन्यां पृथिव्यां पुष्पकेतुर्मदन इव लक्ष्मणसेनः सौन्दर्यातिरेकादिति भावः। त्वां प्रणयसुभगं यथा स्यात्तथा गाढ़माश्लिष्यति त्वदीयवचने स्वाभिमतप्रकटनार्थमिति भावः।

९६। अनुरक्ताङ्गनानां वाचिकानि वचनसमूहाः प्रणयिनि जने सुधावीचय इव भवन्तीति अन्वयः।

---

1. कर—A and R. करु—M. The marginal note in A explains करुण as मसृणादि ।

पार्श्वे पश्चादपि च पुरतो दृश्यमानात्मरूपं
व्यक्तं देव त्वमसि जगतामीश्वरः शार्ङ्गपाणिः ।
तन्मां भक्तिप्रवणमनसं नानुगृह्णासि कस्मात्
कायव्यूहं रचयितुमलं नापरः कैटभारेः ॥ ९७ ॥

सौधोत्सङ्गे मुकुलितदृशं तत्सखीनां पुरस्तात्
मामासाद्य त्वमयमकथा गोचरे यन्न वाचाम् ।
तत् कुर्व्वीथाः सुभग न सतां गर्हणीया[1] यथा स्यां
कन्यां[2] लोके[3] न खलु सुधियो [4]दूषयित्वा त्यजन्ति ॥ ९८ ॥

वृत्ते गौरीपरिणयविधौ [5]पीवरप्रीतिभाजा
सृष्टस्येव त्रिपुरजयिना पुष्पकेतो[6]र्नवस्य ।

९७। कैटभारेर्नारायणात्। त्वदनुरक्तचित्ता सर्व्वैव त्वामहं प्रत्यक्षीकरोमीति भवान् विश्वरूपधारी कृष्ण एव नापर इति भावः। कृष्णस्य इव च भवतोऽपि सम्भाव्यते बहुकलत्रोपभोग इति ध्वनिः। एतेन अवरोधबहुत्वेऽपि न मद्ग्रहणे भवतः क्वापि वर्त्तते बाधा इति सूचितम्।

९८। तत् तदा सखीनां पुरस्तात् मुकुलितदृशं माम् आसाद्य अयं त्वं वाचां गोचरे यत् न तत् भोगादिकं अकथा तत् तस्मात् यथा अहं गर्हणीया न स्याम् तथा कुरु इत्यन्वयः। परिग्रहत्वेन मामपि स्वीकुरु इति भावः।

९९। सञ्जाते गौरीपरिणये प्रमुदितचेतसा भगवता महेश्वरेण नूतनः कश्चित् मदनः समुत्पादितो लक्ष्मणसेनरूपः मदनमन्तरेणेदृशसौन्दर्य्यस्यान्यत्र दुर्लभत्वात् इति भावः।

---

1. —णीया—M and A. —गीया—R.
2. —न्या—M. —न्यां—A.
3. —कं—M. —के—A and R.
4. भू—M. दू—A.
5. पी—M. प्री—A.
6. —तो—M and A. —तु—R.

राजन्यस्तु प्रणयचतुरो दूरतः प्रेमबन्ध,
पुण्येन स्यां तव चरणयोः केन संवाहनेऽपि ॥ ९९ ॥

सन्देशोऽयं मनसि निहितः कच्चिदायुष्मता मे
किंवा भूयस्त्वयि विरचितैरङ्ग भिक्षाप्रकारैः।
पारार्थ्यैक[1]प्रवणमनसस्त्वद्विधा बाष्पमिश्रान्
आपन्नानां न खलु बहुशः काकुवादान् सहन्ते ॥ १०० ॥

दन्तिव्यूहं कनकलतिकां चामरं हैमदण्डं
यो गौड़ेन्द्रादलभत कविक्ष्माभृतां चक्रवर्त्ती।
श्रीधोयीकः सकलरसिकप्रोतिहेतोर्मनस्वी
काव्यं सारस्वतमिव [2]महामन्त्रमेतज्जगाद (क) ॥ १०१ ॥

---

संवाहनेऽपि स्याम् समर्था इति शेषः। भार्य्यात्वेन मां नाङ्गीकरोषि चेद्दासीत्वेनापि मम ग्रहणं भवत्विति निष्कृष्टार्थः।

१०१। इदमादिना श्लोकचतुष्टयेन कविः स्वपरिचयं प्रकटय्य स्वनिबन्धस्यास्यार्थित्वं प्रार्थितवान् स्वां तत्त्वज्ञानस्पृहां च सूचितवान्। महामन्त्रत्वञ्चास्य सकलरसिकजनसम्मोहनहेतुतया इति भावः।

---

1. —र्थ्यैक—A. —र्थैक—M.
2. महा—A. सतत्—M ; a lacunae here in R.

---

(क) This verse, in an altered form, occurs in the *Saduktikarṇāmṛta* where the first half shows little difference from the reading as given above, the only difference being कनककलितं in place of कनकलतिकाम् and हेमदण्डं in place of हैमदण्डं। The second half as it occurs in the above work runs as follows—

ख्यातो यश्च श्रुतिधरतया विक्रमादित्यगोष्ठी-
विद्याभर्तुः खलु वररुचेराससाद प्रतिष्ठाम् ॥

(J. A. S. B—1906—P. 15)

गोष्ठीबन्धः सकल[1]कविभिर्वाचि वैदर्भरीति-
र्वासो गङ्गापरिसरभुवि स्निग्धभोग्या विभूतिः ।
सत्सु स्नेहः सदसि कविताचार्य्यकं भूभुजां मे
भक्तिर्लक्ष्मीपतिचरणयोरस्तु [2]जन्मान्तरेऽपि ॥ १०२ ॥

यावच्छम्भुर्वहति गिरिजा[3]संविभक्तं[4] शरीरं
यावज्जैत्रं कलयति धनुः कौसुमं[5] पुष्पकेतुः ।
यावद्राधारमणतरुणी[6]केलिसाक्षी कदम्ब-
स्तावज्जीयात् कविनरपतेरेष वाचां विलासः ॥ १०३ ॥

कीर्त्तिर्लक्ष्मा सदसि विदुषां शीतलक्षोणिपाला
वाक्सन्दर्भाः कतिचिदमृतस्यन्दिनो निर्म्मिताश्च ।

१०२ । भूभुजां सदसि कविताचार्य्यकमित्यन्वयः ।
१०३ । राधारमणः कृष्णश्च तरुणी गोप्यश्च तेषां केलिः विहारस्तस्य साक्षी ।

1. सरस—A. सकल—M.

2. ज—M and A. य—R.

3. —जा—M, A, P. —जां—R.

4. —विक्तं—A, R, P. —भक्तं—M. In A—विक्तं is corrected into भक्तं in the margin.

5. —सुमं—A.—हमं—P.—तुकं—M.

6. —रणी—M. —वणी—A and P.

तीरे सम्यग्यमरसरितः क्वापि [1]शैलोपकण्ठे
[2]ब्रह्माभ्यासे प्रयतमनसा नेतुमीहे दिनानि ॥ १०४ ॥ (क)

इति श्री[3]धोयी[4]कविराजविरचितं पवनदूताख्यं[5] काव्यं[6] समाप्तम् ।

---

१०४ । शैलला: श्रान्ता: परिश्रमा इति यावत् क्षौणिपाला नरपतयो येभ्यस्ते तादृशा वाक्सन्दर्भा: । ब्रह्माभ्यासे ब्रह्मणोऽभ्यासेऽनुशीलने ब्रह्माधिगमार्थम् ध्यानादिके क्रियाकलापे इत्यर्थ: ।

---

1. शैलो—A, P. शैवो—M.
2. ब्र—M and A. ब्रा—P.
3. श्री—M. Omitted in A and P.
4. धोयीक—M. धोयी—A and P.
5. —ख्यं—M and P. —ख्य—A.
6. काव्यं—A and P. Omitted in M.

(क) This verse, also, is quoted in the *Saduktikarṇāmṛta* where the only variants are क्षोणि for क्षौणि, प्रवणमनसा for प्रयतमनसा and शैलोप for शैवोप—J. A. S. B—1906—P. 15.

# INDEX I.

## Index to the first lines of the verses of the Pavanadūta.

*( The numeral figures refer to the number of verses )*

---

# INDEX II.

**Index to proper names of historical or geographical importance in the Pavanadūta.**

*(The numeral figures refer to the number of verses)*

## ERRATA.

| Page | Line | Incorrect | Correct. |
| --- | --- | --- | --- |
| 3 | 9 | verse 102 | verse 103 |
| 4 | 3 | not Lakṣmaṇasenat | not Lakṣmaṇa-sena |
| 7 | 25 | haveing | having |
| 12 | 11 | here | in the Pavanadūta |
| 14 | 9 | *Pavana* 16 | *Pavana* 61 |
| 16 | 11 | *v.* 3 | *v.* 2 |
| 26 | 5 | pieces | pieces of |
| ,, | 7 | of locality | locality. |
| 30 | 4 | —स्तोय | —स्तोग |
| ३ | १ | निधु[1]वन | निधुवन[1] |
| ,, | ७ | वधनां | वधूनां |
| ५ | Footnote 2 | -लि-R -लो-M and A | -लिला-R -लोला-M and A. |
| ११ | ३ | भ्रलतानां | भ्रूलतानां |
| ,, | १४ | —मदः | —मदैः |
| १३ | १२ | —ह्वितय | —द्वितय |
| १४ | २ | भ्रूकुटि— | भ्रुकुटि— |
| १६ | १ | चेतोवर्त्ति[1] | चेतोवर्त्ति[1] |
| १८ | ८ | विद्यल्लेखा | विद्युल्लेखा |
| १९ | Footnote 1 | स्मा, स्फा, धा | -स्मार, स्फार, धार |
| २२ | ,, 6. | न—M and A | न् —M and A. |
| २२ | १५ | पञ्चत्रिंशद्भिः | एकत्रिंशद्भिः |
| २३ | २ | कुषुम | कुसुम |
| ३३ | ५ | ततसखीनां | तत् सखीनां |